योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 264 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 19 जुलाई 2021 सोमवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

आकिञ्चन्ये न मोक्षोऽस्ति
किञ्चन्ये नास्ति बन्धनम्॥
किञ्चन्ये चेतरे चैव।
जन्तुर्ज्ञानेन मुच्यतेअ ॥

अर्थ- दरिद्रता में मोक्ष नहीं, और संपन्नता में कोई बन्धन नहीं। किन्तु दरिद्रता हो या संपन्नता, मनुष्य ज्ञान से ही मुक्ति पाता है।

### संक्षिप्तवार्ताः

**पुरी ।** बाहुडायात्रायै रथाः दक्षिणाभिमुखा अभवन् । रथयात्रायां नियमोल्लंघनकारिणां कृते प्रशासन-पक्षतः कार्यानुष्ठानं भविष्यति ।

**कन्धमालः।** पति- पत्नी कलहयोः करुण परिस्थितिः जाता , उद्भट मात्रा स्वकीयौ कन्या-पुत्रौ कूपे निक्षिप्तौ। स्वयं आत्महननकर्तुं चेष्टयन्ती विफला जाता ।

**कोरापुटम् ।** कालजयि-सारस्वतसाधकस्य गोपीनाथमहान्तेः स्वगृह-साधनापीठः पाठागार परिवर्ते संप्रति पण्यभाण्डार रूपेण परिवर्तितः।

**भुवनेश्वरम् ।** आगामिनि 21 दिनांके वंगोपसागरे लघुचापो भविष्यति । फलतः 6 राज्ये बहुला वृष्टिर्भविष्यतीति भारतीय मौसम-विभागपक्षतः सूचना आगता ।
चलित- जुलाइ मासस्य 26 दिनांके राजे दशम –एकादश कक्षा-छात्राणां कृते विद्यालये शिक्षादानं भविष्यति ।

**सम्बलपुरम् ।** रात्रौ भोजनं कृत्वा शयितः , शयनावस्थायां सर्पाघातेन 35 वर्षीय्य युवको मृतः ।

**नयागडम् ।** क्षुद्रा कन्या परी हत्या इत्यवसरे वर्षातीता । अद्यावधि न्यायः न प्राप्तः । पितरौ सवीच्चन्यायालयं प्रति आगतौ ।

**नन्द प्रदीप्त कुमारः**

गतवर्षे कांवड़सङ्घैः प्रशानेन च सह वार्तालापानन्तरं स्वयं स्थगिता आसीत् कांवडयात्रा

# कांवडयात्राम् उद्दिश्य कांवड़सङ्घैः संवादे व्यस्तः राज्यसर्वकारः

## गृहविभागस्य अवरमुख्यसचिवाय पुलिसमहानिदेशकः च अपरराज्यैः सह वार्तालापं कर्तुं निर्दिष्टः।



**लखनऊ।** कांवडयात्राम् उद्दिश्य राज्यसर्वकारः कांवड़सङ्घैः सह संवादे व्यस्तः अस्ति । मुख्यमन्त्रिणा योगिना अधिकारिणः कोविडसङ्क्रमणस्य स्थितिम् उद्दिश्य कांवड़सङ्घैः सह संवादं कर्तुं निर्दिष्टः । राज्य-सर्वकारेण परिस्थितिम् अवधाय वार्ता क्रियते । कांवडसङ्घानां सहमत्याधारे निणऱ्यः नेस्यते । मुख्यमन्त्रिणा योगिना आदित्यनाथेन गृहविभागस्य अवरमुख्यसचिवाय पुलिसमहानिदेशकाय च कावंडयात्राम् उद्दिश्य अपरराज्यैः सह वार्तालापं स्थापयितुम् अपि निर्देशः दत्तः । एतस्य मध्ये सवीच्चन्यायालयेन राज्य-सर्वकारस्य निवेदनं स्वीकुर्वता कांवडयात्रायां जुलाईमासस्य आग्रिमश्रुतेस्तिथिः सुनिश्चिता । परम्परागतरूपेण जुलाईमासस्य पञ्चविंशतिदिनाङ्कतः कांवडयात्राम् उद्दिश्य राज्यसर्वकारः प्रत्येकस्थित्यानुसारं सज्जीकरोति । कोरोणासङ्क्रमण् उद्दिश्य सर्वकारः किमपि सङ्कटम् उन्नेयतुं नेच्छति । एतन्निमित्तम् अधिकारिणः कांवड़सङ्घैः सह संवादं कर्तुं उक्तं येन यात्रायाः आयोजनम् उद्दिश्य समुचितः निणऱ्यः नेतुं शक्यः । संवादकाले सर्वकारस्य अधिकारिभिः कांवड़सङ्घेभ्यः कोरोणासङ्क्रमणस्य गभीरतां वदता संवादः क्रियते।

कावंडयात्राम् उद्दिश्य सर्वकारस्य प्रयासः अस्ति यत् धार्मिकभावनानाम् अपि उपहतिः न भवेयुः अपि च सङ्क्रमणात् रक्षणम् अपि भवेत् । श्रावणमासे प्रत्येकवर्षे भूयमाने धार्मिकयात्रायाम प्रदेशे वृहद्सङ्ख्यायां श्रद्धालवः संलग्नाः भवन्ति । यात्राम् उद्दिश्य भक्तृषु अधिकोत्साहः भवति । कोरोणासङ्क्रमणम् उद्दिश्य सर्वकारः पूर्वमेव अधिकसतर्कता वत्र्यति । गतवर्षे कांवडसङ्घैः सर्वकारेण च सह वार्तानन्तरं स्वयं यात्रा स्थगिता आसीत् । सर्वकारेण अस्मिन् पर्याय अपि सङ्घैः निरन्तरं संवादः क्रियते ।

उत्तरप्रदेशसर्वकारस्य निवेदनं स्वीकुर्वता सवीच्चन्यायालयेन अपि अस्मिन् विषये आग्रिमश्रुत्याः तिथिः जुलाईमासस्य नवदशदिनाङ्क दत्तः । अवधातव्यं यत् मुख्यमन्त्रिणा योगिना पूर्वमेव उक्तं यत् सङ्क्रमणं व्यक्तेः जातिः, मुखं, धर्मम् च न पश्यति ।

## सवीच्च न्यायालयेन उत्तरप्रदेश सर्वकारस्य निवेदनं स्वीकृतं, कांवड यात्रायां जुलाई मासस्य आग्रिम श्रुतिः

## विश्वहिन्दू परिषदः आवेदितः यत् कोविड व्यवस्था निर्देशेन सह अनुमतिंददताम्

**नवदेहली।** कोरोना महामार्याः कारणेन 25 जुलाईतः आरभ्यमाणां कॉवड़ यात्रां उत्तरा खण्डस्य पश्चात् इदानीं उत्तरप्रदेश सर्वकारः अपिनिरस्तं चकार। अस्मिन् विश्वहिन्दूपरिषद् उभाभ्यांराज्य सर्वकारभ्याम् कॉवड़ यात्रा निरस्तीकरणे पुनर्विचारयितुं न्यवेदितम्। विश्वहिन्दूपरिषदः अन्ताराष्ट्रियः संयुक्तमहासचिवः सुरेन्द्रः जैनः उत्तरप्रदेशस्य उत्तराखण्डस्य च सर्वकाराभ्याम् स्व स्वनिर्णयेसुपुन र्विचार कर्तुं धार्मिकं च तीर्थयात्रां कोरोना प्रतिरोधनादि प्रतिबन्धैः सहअनुमतिं प्रदानस्य आग्रहंकृतवान्। उल्लेखनीयमिदं गतरात्रौ उत्तर प्रदेशेऽपि कॉवड़यात्रा स्थगिता। योगी सर्वकारेण वार्तानन्तरे कॉवड़ संघाः निर्णयं कृतवन्तः। मुख्यमंत्रिणः निर्देशे अवर मुख्य सचिवः गृहं अवनीश अवस्थी, डीजीपी च मुकुल गोयलः वार्तां अकुरूताम्। कोविड-19 इतिपश्यन् उत्तर प्रदेशे कॉवड़ यात्रा न भविष्यति।

विश्व हिन्दू परिषद
धर्मो रक्षति रक्षितः

**उत्तर प्रदेशेऽपि कॉवड़यात्रा स्थगिता**

## मन्त्रणसभायाः वर्षाकाल सम्मेलनं श्वः आरभ्यते



**नवदेहली।** भारतस्य उभयोः मन्त्रणसभयोः - लोक सभाराज्यसभयोः वर्षाकाल सम्मेलनं श्वः आरभ्यते। कोविडनुशीलनानि परिपाल्य आयोजिते सम्मेलने वार्तामाध्यमानां कृते विहितं नियन्त्रणमनुवर्तिष्यते। सन्दर्शकेभ्यः निरोधः अस्ति। आगस्टमासस्य 13 तमदिनाङ्कपर्यन्तम् अनुवर्तमाने सम्मेलने प्राक्तनानि नूतनानि च समेत्य 27 विधेयकानि उत्तीर्णं गम्यमानानि सन्ति।

## एपी मिश्रः इलाहाबाद उच्च न्यायालयातः प्रतिभूः प्राप्तवान्



**प्रयागराजः।** पूर्वप्रबन्ध निदेशकः उत्तर प्रदेशराज्य विद्युत निगमस्य एपी मिश्रः इलाहाबाद उच्चन्यायालयातः प्रतिभूः प्राप्तवान्। तंनवम्बर 2019 ईसवीये डीएचएफएल प्रकरणे बन्दी आकारितं स लखनऊ कारागारे निरूद्ध आसीत्। तम् श्रीअवनीश अवस्थी महोदयस्य स्थाने प्रबन्ध निदेशकः स्थापितं क्रियतेस्म त्रिबारं च सेवा विस्तारं लब्धवान् सः। श्रीमिश्रः एकः योग्यः ज्ञानवान् कुशलश्च तकनीकज्ञः मन्यतेस्म। इलाहाबाद कुम्भमेलापके भव्यतमायैविद्युत व्यवस्थायै तम् तत्कालीनः प्रधानमंत्री अटलबिहारी बाजपेयी महाभागः सम्मानितं चकार।

## 29, 30 अगस्ते अयोध्यायां भव्यं रामायण कॉनक्लेवः

**अयोध्या।** 29, 30 अगस्ते अयोध्यायां आयोजयिष्यति भव्यं रामायण कान्क्लेवः। प्रदेशस्य पंचसु सांस्कृतिक क्षेत्रेषु अवधान्चले, पूर्वांचले, बुन्देलखण्डे, ब्रिजआंचले पश्चिमांचले च आयोजित भविष्यति कान्क्लेवः। भगवतः श्रीरामस्य



प्रसंगानां सजीवं चित्रणं लोक कला नांमाध्यमेन भविष्यति रामायण कान्क्लेवः।

## 'विकास' यन्त्रपरीक्षा विजयं प्राप्ता, ऐ एस् आर ओ, इलोण् मस्केन अभिनन्दितम्

**नवदेहली।** भारतीय बहिराकाश-अनुसन्धान-सङ्घटनायै इलोण् मस्कः अभिनन्दनं दत्तवान्। मानवं बाह्याकाशं नेतुम् अयोक्ष्यमानायां गगनयान परियोजनायै निर्मितं विकासयन्त्रस्य तृतीयपरीक्षा विजयपथं प्राप्तम् इति कारणेन भवति इलोण् मस्कस्य अभिनन्दनम्। अमेरिक्कायाः निजीयबाह्याकाश अनुसन्धानसंस्था इति प्रथितायाः स्पेस् एक्स् इत्यस्याः तथा याननिर्माण संस्थायाः टस्ले इत्यस्याः च अध्यक्षः भवति मस्कः। ट्विटर माध्यमेन आसीत् तस्य अभिनन्दनम्। 2021 डिसम्बर मासे विक्षेपणयानस्य मनुष्यरहितपरीक्षा निर्वोढुम् भारतीय बहिराकाश-अनुसन्धान-सङ्घटनेन (ऐ एस् आर ओ) निश्चिता।



## त्रयोदश-यात्रिकैः सहितम् उड्डीयमानं रष्यायाः विमानं सैबीरियादेशे अप्रत्यक्षम् भवत्



**नवदेहली।** रष्यायाः यात्राविमानम् उपरि उड्डीयमानानन्तरम् अप्रत्यक्षमभवत्। सैबीरियायाः प्रान्तप्रदेशे टोम्स्किल् देशे एव विमानम् अप्रत्यक्षमभवत्। अष्टाविंशति जनेभ्यः कृते यात्रासौकर्ययुक्ते विमाने वैमानिकं आहत्य त्रयोदश जनाः आसन् इत्येव सूचना। अप्रत्यक्षं विमानं विचेतुं परिश्रमः आरब्धः। विमाने सप्तदश जनाः आसन् इत्येव प्रादेशिकमाध्यमैः प्रथमम् आवेदितम्। दशदिनेभ्यः पूर्वं रष्यायां अष्टाविंशतिजनैः सहितं यात्राम् आरब्धं विमानं समुद्रे पतित्वा भग्नम् आसीत्। भूमौ अवरोहणात् दशकिलोमीटर दूरे एव अन्टोनोव् ए एन् - 26 नाम विमानेन सह आशयविनिमयः विनष्टः अभवत्। अनन्तरं विमानं भग्नमभवत् इति विदितम भवत्।

## कोविषील्ड् नाम प्रतिरोधौषधस्य अङ्गीकाराय प्रर्थनापत्रं न लब्धम् इति यूरोपीय -औषधप्रतिनिधिसंघेन आवेदितम्



**नवदेहली।** कोविषील्ड् प्रतिरोधौषधस्य यूरोपीय संयुक्तराष्ट्रस्य (European union) अङ्गीकाराय सीरम् इन्स्टिट्यूट् ओफ् इन्ट्या संस्थायाः प्रार्थनापत्रं इतःपर्यन्तं न लब्धम् इति यूरोपीय - ओषधप्रतिनिधिसंघेन वार्तामेलने (EMI ) आवेदितम्। यूरोपीय संयुक्तराष्ट्रस्य अङ्गीकाराय कोविषील्ड् उत्पादकैः यूरोपीय - औषधप्रतिनिधिसंघाय औद्योगिकरूपेण प्रार्थनापत्रं दातव्यमस्ति। यूरोपीय अङ्गराष्ट्रेषु यात्रां कर्तुं फैस,मोडेण, अस्ट्रा सेनेक्का, जोण्सण् आन्ट् जोण्सण् इत्येते वाक्सिनः एव यूरोपीय - औषधप्रतिनिधिसंघेन अङ्गीकृताः।

## सम्पादकीयम्

# जयतु संस्कृतम जयतु भारतम्

भो सज्जनाः! विचारयन्तु भवन्तः सर्वे देवभाषायां यदा कश्चित्परस्परं संवादयति, तर्हि तानि शब्दानि श्रुत्वा हृदये महती प्रसन्नता भवति। अस्माकं राष्ट्रे संस्कृतभाषाप्रचाराय राज्ये राज्ये, नगरे नगरे, ग्रामे ग्रामे च बहुविधाः कार्यक्रमाः क्रियन्ते। बह्वयः संस्थाः कार्यं कुर्वन्ति च। विविधकक्ष्याः, सभाः, सङ्गोष्ठ्यः, सम्मेलनानि, पुस्तकप्रकाशनम्, पाण्डुलिपिग्रन्थसम्पादनम्, स्पर्धाः, प्रदर्शिन्यः, शोधकार्याणि इत्येतानि सर्वाणि उत्तमानि एव। अवश्यं करणीयानि एव। तैः संस्कृतस्य अधोगतिः अवरुद्धा भवेत्, वृद्धिरपि भवति भागशः। यथास्थितिरक्षणं वा भवेत्। परन्तु यावत् विद्यालय-महाविद्यालय-विश्वविद्यालयेषु जायमानासु संस्कृतकक्ष्यासु संस्कृतभाषा न आगच्छेत् तावत् उपरितनानां सर्वेषां कार्याणां स्वल्पः परिमित एव परिणामो भवेत्। मित्राणि, संस्कृतकक्ष्यासु संस्कृतम् आनेतुं प्रयत्नं कुर्मेरिति निवेदये। जयतु संस्कृतम् जयतु भारतम्।

# ‘तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्’ एतस्मात् अदृश्यत्वादिगुण स्वरूपात् अक्षरादेव देवमनुष्यगन्धर्वादीनां भूतानामुत्पत्तिः भवति

उपनिषत्सु मानवानां परमपुरुषार्थसाधिका ब्रह्मविद्या उपदिष्टा अस्ति। अत एव उपनिषत् समग्रस्यापि वेदस्य सारभूता सती वेदान्तशब्देन व्यवह्रियते। उपनिषद्वाक्यानि आधारीकृत्यैव भगवता बादरायणेन सूत्रात्मकः ग्रन्थः प्रणीतः। अत्र आपातविरुद्धवाक्यानि समन्वितानि भवन्ति। एनं ग्रन्थमाश्रित्यैव विविधानि भाष्याणि रचितानि तदनुसारं सम्प्रदायोऽपि प्रारब्धः। अद्वैतदर्शनं भवति शंकराचार्य प्रवर्तितम्। एतदेव भवति सर्वप्राचीनं वेदान्तसम्प्रदायेषु। शङ्करभगवत्पादानां भाष्यं शाङ्करभाष्यमिति उच्यते।अस्मिन् दर्शने केवलं ब्रह्मण एव सत्ता अङ्गीक्रियते। शुद्धब्रह्मणः स्वरूपस्य प्रतिपादनाशक्यत्वात् नेति नेति मुखेन सर्वत्र व्यपदिश्यते। अतः द्वैतस्य निषेधात् इदम् अद्वैतमुच्यते। अत्र जगत् शुक्तिरूप्यवत् प्रातिभासिकं भवति न यथार्थम्। जीवः ब्रह्मस्वरूप एव भवति तस्य च विभुपरिमाणत्वमङ्गीक्रियते। मोक्षश्च विस्मृतस्य कण्ठस्थहारस्य प्राप्तिरिव भवति। शुद्धाद्वैतदर्शनं वल्लभाचार्येण प्रवर्तितम्। वैष्णवसम्प्रदायेषु एव अस्य मतम् अन्तर्भवति। एतन्मते जगत् सत्यं भवति ब्रह्मण उत्पन्नत्वात्। जीवाः ब्रह्मण उत्पन्ना नित्यरूपाः अणुपरिमाणाः। अनेन मोक्षलाभार्थं कश्चित् पुष्टिमार्गः विहितः। मोक्षप्रकारा अपि विविधा दर्शिताः।

अत्यन्तं नवीनं दर्शनं भवति अचिन्त्यभेदाभेदः। अस्य प्रवर्तने मुख्यः वस्तुतः श्रीकृष्णचैतन्यः, यः मध्वाचार्यस्य पूर्णप्रज्ञभाष्यं श्रीभागवतानुसारं व्याख्याति स्म। तस्यैव ग्रन्थरूपं प्रदत्तवान् बलदेवः गोविन्दभाष्यरूपेण। अत्रापि जगत् सत्यं भवति। जीवा ब्रह्मणः उत्पन्नाः तस्यैव अंशस्वरूपाः परन्तु ततो भिन्ना भवन्ति। जीवस्य परिमाणम् अणुपरिमाणं भवति। अत्र श्रीकृष्णसायुज्यमेव मुक्तिः सख्यदास्यादिभावेन तस्य सेवा एव मोक्षोपायः। इदानीं शुद्धाद्वैताचिन्त्यभेदाभेदयोः मूलतत्त्वानि उपस्थाप्यन्ते। शुद्धाद्वैतम् शुद्धाद्वैतस्य प्रवर्तको भवति वल्लभाचार्यः। अस्य आचार्यस्य समयः पञ्चदशशतकम्। अस्य भाष्यम् अणुभाष्यम् इत्युच्यते। अनेन आचार्येण शङ्कराचार्येण अद्वैतवेदान्ते प्रतिपादितस्य मायावादस्य प्रमाणपुरःसरं खण्डनं कृत्वा शुद्धाद्वैतस्य प्रतिष्ठापनं कृतम्।

## बालकृष्णभट्टमतानुसारं श्रीकृष्ण एव परब्रह्म पुरुषोत्तमः

बालकृष्णभट्टमतानुसारं श्रीकृष्ण एव परब्रह्म पुरुषोत्तमः। श्रीमद्भगवद्गीतावचनात् श्रीकृष्णस्य निर्विशेषत्वादिगुणाः वर्ण्यन्ते। यथा- मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। एवं च अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः इत्यादिश्रुतिवाक्यानां श्रीकृष्णे अन्वयं साधयन्ति। शुद्धाद्वैतमतानुसारं ब्रह्मणः रूपद्वयं वक्तुं शक्यम् तद्धि परब्रह्म पुरुषोत्तम इत्येकम् अपरं च अक्षरं ब्रह्म। परब्रह्म पुरुषोत्तम - श्रीकृष्ण एव द्विभुजः अथवा चतुर्भुजः सन् वृन्दावने अथवा वैकुण्ठादिषु स्थानेषु तद्ध्यानपरैः भक्तैः सह रममाणः तिष्ठति। भक्ताश्च तेन सह आनन्दमनुभवन्ति।अक्षरब्रह्म- श्रीकृष्ण एव समग्रस्य प्रपञ्चस्य कारणस्वरूपो भवति। तथाहि तस्य यदा इच्छा भवति बहु स्याम प्रजायेय इति तदा ततः आनन्दांशस्य तिरोभावो भवति। कश्चन नवीनमेव रूपम् आविर्भूयते तदा यच्च सर्वकारणकारणम्। इदमेव अक्षरब्रह्मशब्दवाच्यम्। उक्तं च श्रीमद्भागवते - ‘‘तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्’’ इति (3.11.41)। एतस्मात् अदृश्यत्वादिगुणस्वरूपात् अक्षरादेव देवमनुष्यगन्धर्वादीनां भूतानामुत्पत्तिः भवति।

## जगत् - अत्र जगत् सत्यस्वरूपं भवति

अत्र जगत् सत्यस्वरूपं भवति। जगत् साक्षात् ईश्वरकार्यं भवति न च प्राकृतं न वा परमाणुजन्यं न वा विवर्तरूपम् असद्रूपं वा किञ्चित्। ‘‘नासतो विद्यते भावो नाभावो विद्यते सतः’’ इति श्रीमद्भगवद्गीतावचनात् सद्रूपात् परमात्मनः असद्रूपस्य प्रपञ्चस्य सम्भव असम्भवः। अत एतेषां मते - प्रपञ्चो भगवत्कार्यः तद्रूपो माययाभवत्। इदं जगत् अधिकारिभेदेन भिन्नतया प्रतिभाति। तथाहि उत्तमाधिकारिणां सविधे जगदिदं ब्रह्मात्मकं शुद्धं च भवति। शास्त्राभ्यासेन संस्कृतमतानां मते तु जगत् परमात्मधर्मेण युक्तं सत् सत्यभूतं भवति। जगति मायाधर्मा ये भवन्ति ते तु मिथ्याभूताः। अविवेकिनस्तु मन्यन्ते जगत् ब्रह्मणः मायायाश्च धर्मेण उत्पन्नं किमपि सत् वस्तु। हरितोपनेत्रेण यथा सर्वं हरितं दृश्यते परन्तु तस्य हरितवर्णं मिथ्या भवति तद्वत् मायाधर्माः सर्वे मिथ्या इति एते नाङ्गीकुर्वन्ति। इयं तु भवति अधिकारिणां भेददृष्टिः, न हि जगतः वास्तविकं स्वरूपमीदृशम्। जगत् तु नित्यं सत्यं ब्रह्मस्वरूपं भवति। प्रमाणानि शुद्धाद्वैते त्रीण्येव प्रमाणानि अङ्गीकृतानि। तानि हि प्रत्यक्षम् अनुमानं शब्दः इति। श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्। प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते। इति श्रीमद्भागवतवचनानुसारं यद्यपि गोस्वामिपुरुषोत्तमेन प्रस्थानरत्नाकरे एतेषामुल्लेखः कृतः परन्तु अधिका विद्वांसः ऐतिह्यं शब्दप्रमाणे एव अन्तर्भावयन्ति। अतः त्रीण्येव प्रमाणानि। मोक्षस्वरूपं तत्साधनं च वैष्णवदर्शने आध्यात्मिकात् आधिदैविकात् आधिभौतिकात् तापात् ऐकान्तिकी निवृत्ति एव मोक्षः निर्वाणं वा। मायया बद्धस्य जीवस्य मुक्तिः न भवति। मुक्तस्य जीवस्य पञ्चविधात् अध्यासात् देहाध्यासात् इन्द्रियाध्यासात् प्राणाध्यासात् अन्तःकरणाध्यासात् स्वरूपविस्मृतेश्च निवृत्तिः भवति। अध्यासात् मुक्तौ सत्यां जन्ममरणात् स्वतः निवृत्तिः भवति। मुक्तिरपि द्विप्रकारका भवति सात्त्विकानां भवति सायुज्यमुक्तिः निर्गुणानां भवति ब्रह्मभावमुक्तिः। सायुज्यमुक्तिर्नाम भगवल्लीलास्वादः। जीवस्य श्रीकृष्णेन सह दिव्यवृन्दावने लीला तथा तेन सह नित्यसम्बन्ध एव मोक्षः। केचन उत्तमाधिकारिणः जीवाः सत्सङ्गादिपुण्येन भक्तिमार्गोक्तानाम् अनुष्ठानेन च सालोक्यरूपां सायुज्यरूपां सामीप्यरूपां सारूप्यरूपां मुक्तिं च अधिगच्छन्ति। ततः अक्षरब्रह्मणि लीना भवन्ति।

## जीवस्वरूपम्

भगवान् एव रमणेच्छया आत्मनः आनन्दांशं तिरोधाय केवलं सद्रूपेण चिदंशेन च आत्मानं बहुधा प्रकटीकरोति। तदैक्षत बहु स्याम प्रजायेय इति श्रुतिवाक्यमेव एतादृश मतस्य पोषकम्। ईश्वरस्य एव इदं नूतनं रूपं जीव इत्युच्यते। अतः जीवस्य उत्पत्तिः न भवति देह धारण वशादेव जायते म्रियते इत्यादयः व्यवहाराः सम्भवन्ति। शुद्धाद्वैते जीव अणुपरिमाणः भवति। अत्र जीवस्य त्रयो भेदाः सम्भवन्ति। ते हि शुद्धजीवः, संसारी जीवः, मुक्तजीवः शुद्धजीवः- यथा अग्नेः स्फुलिङ्गा उत्पद्यन्ते तथैव कारणस्वरूपात् अक्षरात् जीवः व्युच्चरितः भवति। अविद्यासम्पर्कात् पूर्वम् अतिरोहितानन्द ऐश्वर्यादिषड् गुणोपेतः जीवः शुद्धजीव इत्युच्यते। संसारी जीवः - तिरा-हिते आनन्दांशे मायासंसर्गाच्च ऐश्वर्यादीनां लोपे सति जीवः संसारी इत्युच्यते। अविद्यासम्बन्धवशात् तस्य बन्धः जायते अत एव जननमरणचक्रे आबद्धो भवति। अयं जीवः सर्वविधसुखदुःखानां भोगं करोति तदर्थं च स्थूलसूक्ष्मादिनानाशरीराणां धारणं करोति। मुक्तजीवः - सं-सारी जीवः यदा अनेकप्रकारकाणां दुःखानां भोगवशात् आत्मानं उद्धर्तुकामः भगवतः शरणमायाति तदा भगवदनु ग्रहेण स मायायाः मुक्तो भूत्वा मूलस्वरूपमाप्नोति। इयमेव जीवस्य मुक्तावस्था।

## शुद्धाद्वैतशब्दः द्विधा

1. शुद्धयोः अद्वैतं शुद्धाद्वैतम् इति षष्ठीतत्पुरुषः। तन्नाम शुद्धयोःजगज्जीवयोः ब्रह्मणः अद्वैतम् अभिन्नत्वं शुद्धाद्वैतं जगत् जीवश्च ब्रह्मणः अभिन्न एव इति तात्पर्यम्।
2. शुद्धं च अद्वैतं च शुद्धाद्वैतमिति कर्मधारयः। तस्यार्थः ब्रह्मणः यद् अद्वैतं तच्च शुद्धं मायासम्बन्धरहिम् इत्यर्थः। ब्रह्म सच्चिदानन्दस्वरूपम्। अत्र ब्रह्म सविशेषं निर्विशेषमिति द्वैविध्यं नाप्नोति।

# ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः’

अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भवभूतिना उक्तम् ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः’ अर्थात् यस्य जीवने सङ्गीतकला नास्ति तस्य जीवनं व्यर्थमेव प्रतिभाति। अतः ‘कं सुखमलातीतिकला’ अनया व्युत्पत्तया एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारो कलैव अस्ति। यस्य जीवने कला नास्ति सः पशुवत् जीवनं यापयति। मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित षोड़शकलानाम् चतुषष्टिः कलानाञ्चवर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिः कलानाम् वर्णनम् अक्रियत्। ‘ईश्वर अंश जीव अविनाशी चेतन अमल सहज सुखराशि’ अस्याम् पृथिव्याम् मानवाः भावाभिव्यक्तये ध्वनेः प्रयोगम् अकुर्वन्। क्रमेण सैव ध्वनिः नादशब्देन व्यवहृतः। सैव नादः शब्दरूपेन परिणतो भूत्वा अर्थस्य ग्रहणम् कृतः। तदा शब्दार्थौ सम्मिल्य कवयः वाक्व्यवहारं कृतवन्तः। पुनश्च अयमेव वाक्व्यवहारः भाषाकाव्यसाहित्यसङ्गीतमाध्यमेन मनुष्यान् मनोरञ्जितः। अयमेव मानवसंस्कृतेः उपादानमस्ति। नद्यते इति नादः। न-कार शब्देन प्राणसङ्गकः द-कार शब्देन अग्निसङ्गकः इति अववोध्यते। प्राणाग्नयोः समुद्भूत एषः नादः। आहतानाहतभेदाभ्यां नादः द्विविधः। आहतनादेव सङ्गीतस्य व्युत्पत्तिकारकः। पुरातत्त्वानुसारेण सङ्गीतकलाया उद्भवः स्वयम्भूः परमेश्वरात् अभवत्। नटराजशिवेव नृत्यकलायाः आदिस्रोतमस्ति। भगवती सरस्वती गीतवाद्यकलयोः स्रष्टा। यद्यपि नाट्यशास्त्रानुसारेण ब्रह्मैव सङ्गीतकलायाः जनकः वर्तते। अस्मिन् शोधप्रबन्धे सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारितः। तदेव अनुसृत्य किञ्चित् उच्यते सङ्गीत इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक् गीयते इति सङ्गीतः। यथा उक्तं सङ्गीतरत्नाकारेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते’। गीतं नाटकस्याङ्गमिति नाट्यशास्त्र कारेणोक्तम् तस्यानुगामी वादनं नर्तनं च। मनुसंहितायाम् सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्य व्यवहारम् नृत्यगीतादि स्थाने दरीदृश्यते। अर्थशास्त्रे विष्णुपुराणे बौद्धजैनग्रन्थेऽपि च सङ्गीतशब्देन गीतं वाद्यं नृत्यं त्रयं च अवबोध्यते। वायुपुराण नाट्यशास्त्ररामायणमहाभारतप्रभृतिषु ग्रन्थेषु गान्धर्वविद्या रूपेण सङ्गीतं व्यवहृतम्। सङ्गीतम् विश्वसंस्कृतेः उपादानम्। विश्वशान्तिस्थापनाय सभ्यतासंस्कृत्ययोः संरक्षणाय सङ्गीतं अद्वितीयमुपादानमिति। अस्य सङ्गीतस्य विभिन्नानि रूपाणि संस्कृतसाहित्ये परिदृश्यन्ते। अस्मिन् शोधप्रबन्धे-

(क) सङ्गीतस्वरूपविमर्शः। (ख) सङ्गीतस्योपजीव्यत्वम्।
(ग) संस्कृतसाहित्ये सङ्गीतस्य प्रयोगोपयोगश्च। (घ) व्यवहारिकजीवने सङ्गीतस्योपयोगित्वम्। इति विषयविचारः प्रस्तूयते। संस्कृतसाहित्ये सङ्गीतकलाविमर्शः कलाविद्या देवीचक्रमात्मिका सेयम्। विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः। ‘का नाम कला’ इत्यत्र प्रतीच्चः प्रधीवरो बैडले वदति ‘‘कला वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षी भवति सा सुघटित यथार्थ वैशिष्ट्याभिव्यञ्जनकारिणी क्षमता ‘कला’ इत्यनेन नाम्ना प्रोक्ता भवति।’’ अतः ‘कं सुखं लातीति कला’ - अनया व्युत्पत्या एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारः कलैव अस्ति। यस्य जीवने कला नास्ति स पशुवत् जीवनं यापयति। कला परमानन्दस्य प्राप्तेः साधनमस्ति। यथोच्यते ‘‘लीयते परमानन्देययात्मा सा परा कला’’ मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित् षोड़शकलानाम् चतुःषष्टि कलानाञ्च वर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिकलानाम् वर्णनम् अक्रियत। कलाः सन्ति यद्यपि बहुविधाः परं तत्र पञ्चकलाः ललितकलाः इत्येतया संज्ञया सन्ति प्रसिद्धाः। ताः सन्तीमाः - (1) स्थापत्यकला, (2) मूर्तिकला, (3) चित्रकला, (4) सङ्गीतकला, (5) काव्यकला चेति। सङ्गीतकारा यया कलाया संसारं प्रमोदयन्ति सैव सङ्गी-तकलेति कीर्त्यते। अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भर्तृहरिणा उक्तम् - ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः’ अर्थात् यस्य जीवने सङ्गीतकलानास्ति तस्य जीवनं व्यार्थमेव प्रतिभाति। प्राचीनकालादारभ्याद्यपर्यन्तं सङ्गीतं महत्त्वपूर्णं स्थानं विन्दति। अजस्रमभ्यासं कृत्वा कोऽपि गातुं शक्नोति, किन्तु भगवत्कृपया यदि केनचिद् मधुरः कण्ठध्वनिः प्राप्यते तर्हि गानस्यानन्दः द्विगुणितो भवति। सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारिता। तामेव अनुसृत्य किञ्चित् उच्यते। सङ्गीतम् इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक्गीयते इति सङ्गाम्म्। यथा उक्तम् सङ्गीतरत्नाकरेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते।’ गीतं नाटकस्याङ्गमितिनाट्यशास्त्रकारेणोक्तम्। तस्यानुगामी वादनं नर्तनञ्च। मनुसंहितायां सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्यव्यवहारौ नृत्यगीतादिस्थाने दरीदृश्यते। अर्थशास्त्रे विष्णुपुराणे बौधजैनग्रन्थेऽपि च सङ्गीतशब्देन गीतं वाद्यं नृत्यं चेति त्रयं अवबोध्यते। वायुपुराणनाट्यशास्त्ररामायणमहाभारतप्रभृतिषु ग्रन्थेषु गान्धर्वविद्यारूपेण सङ्गीतं व्यवहृतम्।

(1) नृत्तैर्वादिश्च गान्धवैः (अनुशासनपर्वः)
(2) नृत्तेषु च विशारदाः (आश्वमेधिकपर्वः)
(3) सङ्गीतमिव प्रवृत्तम् (किष्किन्धाकाण्डम् 28.36.37)

आचार्यनारदमहोदयेन गान्घर्वस्य आभिधानिकार्थो निरूप्यते यथा - गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम्।
वेति वाद्यस्य संज्ञेयं गान्धर्वस्य विरोचनम्।।
अर्थात् ग शब्देन गानं लक्ष्यते, धकारेण व कारेण वैनिकस्य प्रवादनं चातुर्येण हस्ताङ्गुलिधारणं प्रवादनपदेन कथितुं वकारेण वादनं लक्षितम्।

# यथामति यथाशक्ति यथौचित्यं यथारुचि, कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते

क्षेमेन्द्रस्य औचित्यविचारचर्चायां काव्यस्य जीवितभूतत्वेन औचित्यं स्वीकृतम्। क्षेमेन्द्रस्य पूर्वे आलङ्कारिकैः औचित्यं न स्पष्टतया स्वीकृतम्। क्षेमेन्द्रस्य औचित्यसिद्धान्तस्य मूलं तावदानन्द वर्धनाचार्यस्य ‘अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्’ इति वचनम्। औचित्यं तु सार्वकालिकमेकं स्थिरं तत्त्वम्। औचित्यं विना काव्यस्य शोभा न जायते। कूटशब्दाः - औचित्यम्, चमत्कारः, संघटना, उचितम्, वक्रता संस्कृतालङ्कारशास्त्राम्बुधौ काव्यात्मतत्त्वचिन्तने प्रयतमाना आलङ्कारिकाः काव्यविच्छित्ति जनकान लङ्कारादीनङ्गीकुर्वन्ति। केचन रसं केचन वालङ्कारं केचन वा रीतिं केचन वा वक्रोक्तिं काव्यात्मरूपेण स्वीकुर्वन्ति; किन्तु व्यासदासापरपून्यनामा क्षेमेन्द्राचार्यो भिन्नरूपेणौचित्यं काव्यात्मतया भिप्रैति। विभिन्ने अलङ्कारग्रन्थे औचित्यस्य स्थितिः अधुना मनसि प्रश्नः समुदेति यत्- अस्यौचित्यस्य धारणा क्षेमेन्द्रेण कुत्र प्राप्यते अथवेदमौचित्यं क्षेमेन्द्रस्य स्वशिरस्प्रसूतम्? अथवेदमौचित्यं पूर्वे एव स्थितम्। अलङ्कारतत्त्वालोचनायामिदं स्पष्टी भविष्यति। वयं भरताचार्यस्य नाट्यशास्त्रानुसन्धानेन जानीमहे यत्- उचितस्थाने उचितप्रयोग एव सर्वथोचितः। भरतेन औचित्यप्रतिष्ठा न कृता, किन्तु नानाभावोपपन्नस्य नानावस्थान्तरात्मकस्य लोकवृत्तानुकरण भूतस्य नाटकस्य प्रमाणीभूते लोके भावाभिनय प्रकृति पाठ्यछन्द स्स्वरसंगीतादिविषयेष्वनुकूलतां प्रतिकूलतां वौचित्यमनौचित्यं वा स स्वीकरोति। औचित्यमन्तरेण सर्वं हास्यतामुपजायते। तथा हि तेनोक्तम् -

**अदेशजो हि वेषस्तु न शोभां जनयिष्यति।**
**मेखलोरसि बन्धे च हास्यैवोपजायते॥**

भरतपरवर्तिभामहेनौचित्यशब्दो नोल्लिखितः किन्त्वौचित्यस्य धारणा तेन प्रदत्ता। तन्मते दोषः कदाचिददोषत्वेन प्रतिपाद्यते-

1. शब्दसन्निवेशविशेषात्। 2. आश्रयसौन्दर्याच्च।

यथा स्रक्षु नीलं पलाशं सौन्दर्यं जनयति। तथा शब्दसन्निवेश विशेषाद्दुरु क्तमपि शोभते। पुनश्च रमणीनयनयोर्यथाञ्जनं शोभां जनयति तथा आश्रयसौन्दर्यादपि शोभां धत्ते। यथा ‘अपाण्डुगण्ड मेतत्ते वदनं वनजेक्षणे’- इत्युदाहरणे सन्निवेशविशेषात् गण्डपाण्डु शब्दयोः प्रयोगोऽदोषत्वेन प्रतिपादितः। पुनश्च ‘विक्लिन्नगण्डानां करिणां मदवारिभिः’ इति। ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शती’ इत्युदाहरणद्वये क्लिन्नगण्डशब्दयोः दोषत्वमाश्रयसौन्दर्याददोषत्वेन संस्थापितम्। भामहस्यात्र व्यक्ताभिप्रायस्तावत्कविना साधुशब्दाः प्रयोगी क्रियन्ते चेत् शब्दसन्निवेशविशेषादाश्रयसौन्दर्ययाद्वा व्यवह्रियन्ते। अर्थादौचित्यवशाच्छब्दप्रयोगे दोषो नोपजायते। भामहेन विषयोऽयमुदाहरणेन दृढ़ीक्रियते- ग्राम्यं सुरभि कुसुमं त्याज्यम्; किन्तु स्रक्षूपयुक्तस्थानविन्यासविरचितत्वात् शोभां धत्ते तथा काव्येष्वपि। दण्डिनः काव्यादर्शे औचित्यशब्दो नेक्ष्यते। तन्मते कविकौशलात्कदाचिद्विरोधो दोषगणनामुत्क्रम्य गुणवीथीं विगाहते। दण्डिनः ‘कविकौशलात्’ इति पदेनौचित्य वत्पद प्रयोगोऽव्यक्त तयोल्लिखितः। नवमशताब्द्यां रुद्रटस्य काव्यालङ्कारे ध्वनितं यत्- रीतिषूपयुक्तस्थानेष्वौचित्यवशाद्रसप्रयोगः समुचितः। दशमशतकस्य भोजराजेनाप्यनुरूपतयानुसरति दण्डिनो वक्तव्यम्। भोजदेवस्य मते जात्यादीनां शब्दालङ्कारसंज्ञा। धारेश्वरभोजदेवेन चतुर्विंशतिप्रकारकाः शब्दालङ्कारजातयः स्वीकृताः। जातेः लक्षणप्रसङ्गे तेनोक्तम् - तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते । सा त्वौचित्यादिभिर्वाचा मलङ्काराय जायते। तन्मते औचित्याकृष्ट एवालङ्कारः। पुनश्च तेन वाच्यविषयदेशसमयौचित्यः दर्शिताः। अनन्तरं गतेरलङ्कारत्वनिर्णयप्रसङ्गे तेन गदितम् -

**पद्यं गद्यं च मिश्रं च काव्यं यत्सा गतिः स्मृता।**
**अर्थौचित्यादिभिः सापि वागलङ्कार ईष्यते॥**

अर्थौचित्यः व्याख्यानप्रसङ्गे उच्यते कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेवेत्यादि पदोपात्तबन्धोचिती द्रष्टव्या इति। प्रयोगव्यवस्थाया उपपादनसमये भोजदेवेनोक्तम् -

**यथामति यथाशक्ति यथौचित्यं यथारुचि।**
**कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते॥**

अत्र मतिर्व्युत्पत्तिः। तत्र शक्तिव्युत्पत्ती कवेरेव। औचित्यं तु पात्रस्यैव। वाग्भटस्य काव्यानुशासने रसाविघातकेषु शब्द दोषेष्वनुचितार्थ शब्ददोषः संलोचितः। पदे वाक्ये चानौचित्येन यत्प्रयुक्तं तदनुचितार्थम्। षोडशप्रकारकेष्वर्थदोषेषु भिन्नसहचरत्व मुल्लेखनीयम्। तत्रोचितसहचारिभेदस्य कथोल्लिखिता। समालङ्कारस्य स्वरूपनिर्णयसमये औचित्यं समाहृतम्। पुनश्च स्त्रीणामष्टावस्थावर्णनाप्रसङ्गे वासकसज्जाया लक्षणं लक्षितम्- ‘उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा।’आनन्द वर्धनेन तस्य ध्वन्यालोके अलङ्कारौचित्य-ध्वन्यौचित्य-वृत्तौचित्य-संघटनौचित्य- प्रबन्धौचित्य-रसौचित्यादिरूपेण औचित्यस्य विभिन्नाः स्थितयः वर्गीकृताः। ध्वन्यालोकस्य तृतीय उद्योते तेन संघटनायाः स्वरूपोद्भावने मनोनिवेशः कृतः। तत्र औचित्यस्य आवश्यकता दृश्यते। संघटना त्रिविधा-असमासा, मध्यमेन समासेन भूषिता, दीर्घसमासा च। किन्तु अस्याः संघटनाया आश्रयः कःनियामकःकःकार्यं किम् इत्येतद्विषये आनन्दवर्धनाचार्येण उक्तम् -

**गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।**
**रसान् तन्नियमे हेतुरौचित्यं वक्त्रिवाच्ययोः॥**

माधुर्यादिगुणाः भवन्ति आश्रयाः, रसद्योतनं तस्य कार्यम्, वक्त्रि वाच्ययोः औचित्यं तन्नियामकत्वम्। वक्त्रिवाच्ययोः औचित्याभावात् काव्यस्य रसप्रतीतौ अभावो जायते। यथा करुणवि प्रलम्भ-शृङ्गारयोस्त्व समासा संघटना, किन्तु अत्र दीर्घमध्यमसमासानां प्रयोगे वक्तृवाच्योः औचित्याभावात् ध्वन्यात्मभूतरसाभावात् न तु काव्यमास्वाद्यते। पुनश्च रौद्ररसे मध्यमसमासस्य औचित्यम्। कथानायकः यदि धीरोद्धतो भवति तर्हि संघटना भवति दीर्घसमासा। धीरललिते च मध्यमसमासा। कुलकादिनिबन्धनस्य आधिक्यात् दीर्घसमासायां खण्डकथा सकल कथयोर्न विरोधः। अत्र रसानुसारं वृत्तौचित्यमनुसर्त्तव्यम्। विप्रलम्भशृङ्गार करुणयोराख्यायिकां दीर्घसमासा न शोभते। अतो गुणसंघटनयोर्नियामकत्वं तावद्वक्तृवाच्यविषयौचित्यम्। एतदौचित्यत्रयं रसौचित्येन नियन्त्रितम्।

**रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।**
**रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत्॥**

रसानुकूलविषयस्य योजनं कर्तव्यम् इतिवृत्तविषयो यदि रसानुसारि न भवति तर्हि तं परित्यज्य रसानुसारिणः कल्पितविषयस्य प्रयोग एव समुचितः। एतेन न दोषः। शास्त्रसमापनेच्छया न रसाभि व्यक्तये सन्धिसन्ध्यङ्गानां योजनं कर्तव्यम्। काव्यस्य प्रयोजनानुसारं कुत्रचिद्रसस्योद्दीपनप्रशमनयोरभिनिवेशः कर्तव्यः। अङ्गिरसाभिव्यक्तिं प्रति दृष्ट्यर्पणम्। कविः स्वशक्तिप्रदर्शनार्थं न रसादेरभिव्यक्तये औचित्यमूलकान् अलङ्कारादीन् योजयति।अतः प्रबन्धे प्रसिद्धानुसारमौचित्यबन्धस्य विन्यास एव रसस्य श्रेष्ठो निदर्शकः। तथा हि नाट्यशास्त्र आदिष्टं- ‘प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्त नायकत्वं च नाटकस्यावश्यक कर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्य विषये कविर्न व्यामुह्यति।’औचित्यो लङ्घनेन काव्यं उपहासास्पदं भवति। औचित्यविचारस्य प्रधानाभित्ति-भूमिस्तावदानन्दवर्धनस्य उक्तिरियम् -

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**
**औचित्योपनिबन्धस्तु रसस्योपनिसत्परा॥**

रसहानेः प्रधानं कारणं तावदौचित्यम्। किन्तु रसस्फुरणस्य श्रेष्ठं माध्यमं औचित्यम्। अभिनवगुप्तस्य मते चेतने शरीरे कटक कुण्डलादिवस्तु यथा शोभादायकं भवति तथा रसात्मके काव्येऽपि उपमाद्यलङ्काराः शोभां वर्धयन्ति। पतिशरीरे कटकादिवस्तु हास्यावहं भवति अनौचित्यत्वात्। काव्येऽपि तथावत्। राजशेखर कृतकाव्य मीमांसायां व्युत्पत्तिपाकयोर्विवेचनायामौचित्यस्य महत्त्वमुरीक्रियते। उचितानुचितयोर्ज्ञानाभावात्कवेर्व्युत्पत्तिर्न सम्भवति। तथा हि प्रोक्तम्- ‘उचितानुचितविवेको व्युत्पत्तिः।’ पुनश्च रसोचित शब्दाभावात्पा कोऽपि न स्यात्। कुन्तकस्य वक्रोक्तितावत् औचित्यसापेक्षम्। तेनोक्तम्- ‘तत्र पदस्य तावदौचित्यं वक्रतायाः परं रहस्यम्। उचिताभिधानजीवितत्वात्। वाच्यस्यप्येकदेशेहप्यौचित्यविरहात् तद्विदाह्लादकारित्वहानिः। कुन्तकेन तस्य काव्यलक्षणे शब्दार्थसम्बन्धस्य औचित्यमङ्गीकृतम्।

**एतत्त्रिष्वपि मार्गेषु गुणद्वितयमुज्ज्वलम्।**
**पदवाक्यप्रबन्धानां व्यापकत्वेन वर्तते॥**

एतद्गुणद्वितीयमौचित्यसौभाग्याभिधानम् उज्ज्वलम् अतीव भ्राजिष्णु पदवाक्य प्रबन्धानां त्रयाणामपि अस्याः कारिकायाः वृत्तावुक्तम्- ‘विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।’ अर्थात् विषयमूलकमौचित्यं रसमपेक्षते। विषयमूलकमौचित्यं रसौचित्यानुसारं गृहीतमगृहीतं वा। यथा - आख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनायाः दिगनु-सर्त्तव्या। ननु प्रबन्धस्य व्यञ्जकत्वम्। प्रबन्धारसादीनां व्यञ्जकः। तस्य व्यञ्जकत्वे ‘पूर्वं हि कथा परीक्षा। तत्राधिकावापः फलपर्यन्ता नयनं रसं प्रति जागरणं तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति।’ (लोचनटीका)। विभावानुभावसञ्चार्य्यौचित्यचारुणः कथाशरीरस्य प्रकाश एव विधिः। तत्र विभावौचित्यं तवत्प्रसिद्धम्। भावौचित्यं तावत्प्रकृतौचित्याद् भवति उत्तममध्यमाधमभावात् दिव्यमानुषादि भावाच्च प्रकृतौचित्यं विविधप्रकारकं भवति। यथायथ प्रकृत्यनुसारि स्थायिभावोपनिबन्धनमौचित्यानुसारि। औचित्यावहमम्लानं तद्विदाह्लादकारणम्। अशक्तं धर्ममर्थानाम् दीपयद् यस्तु दीपकम्।। वक्रोक्त्यौचित्यसिद्धान्तयोः प्रतिपादनं साम्यताम् अवगाहते। क्षेमेन्द्रस्य दृष्टिस्तावत् सर्वकालिकी। कुन्तकस्यापि दृष्टिः सार्विकी एव। अतः उभयो आलोचनायाः क्षेत्रं सर्वव्यापकम्। तत्र व्याख्याकारस्य विश्वेश्वरसिद्धान्तशिरोमणेः ‘हिन्दी वक्रोक्तिजीवित’ इति ग्रन्थस्य भूमिकांशे नगेन्द्रेण लिखितम् -

‘उनकी मान्यता तो केवल यह है कि वक्रता अथवा काव्य सौन्दर्य का मूल आधार औचित्य है; क्योंकि औचित्य कि यत्किञ्चित् हानि से भी सहृदय के आह्लाद में व्याघातोत्पन्न हो जाता है ......... ‘वाक्यस्याप्यैकदेशौचित्यविरहात् सहृदयहृदयाह्लादकारित्वहानिः।’ अतएव कुन्तक के मत से औचित्य काव्य सौन्दर्य अथवा वक्रता का अनिवार्य किन्तु सामान्य गुणमात्र है, न व्यावर्तक धर्म है और न पर्याय ही अर्थात् सौन्दर्य के सभी रूपों में औचित्य की अवस्थिति अनिवार्य है, परन्तु औचित्य के सभी रूपों में कदाचित् वक्रता की अनिवार्य स्थिति कुन्तक को मान्य नहीं है।’

# अमृतवाणी गीतातत्वार्थ बोधः

## गीता ज्ञानप्रियः सदा सुखी भवति।

शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

**संस्कृतभाष्यम्**
**इन्द्रियनिग्रहार्थं हि**
**विद्वान् यत्नं करोति यः।**
**बलवानिन्द्रयग्रामः**
**हरति तस्य वै मनः॥**
**( पण्डित शम्भुनाथ शास्त्री वेदान्ती )**

**यततो ह्यपि कौन्तेय**
**पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि**
**हरन्ति प्रसभं मनः॥**
**भगवद्गीता ॥ 2-61॥**

भगवान् श्रीकृष्णःगीतायाः द्वितीयेऽध्याये 60 तमे श्लोके अर्जुनं सम्बोधयति यत-हे कौन्तेय!हे अर्जुन! पुरूषाणां विषयेषु आसक्तिकारणात् प्रमथन्स्वभावयुक्तानीन्दर्याणि इन्द्रियनिग्रहार्थं यत्नकर्तॄणां विदुषांयोगविद्यापारङ्गतानां मनः बलात् हरन्ति ।
मनुस्मृतावपि मनुनोक्तञ्च---
मात्रा स्वस्रा दुहित्रा वा
न विविक्तासनो भवेत्।
बलवानिन्द्रयग्रामो
विद्वांसमपि कर्षति
(मनुसमृतौ /2/215)
अत्र विशेषतःइन्द्रियाणि विचारणीयानि सन्ति। आत्मदर्शनं विना इन्द्रियाणामासक्तेर्नाशः न सम्भवति तथा विषयासक्तौ स्थिते सत्यपि स्थितप्रज्ञता न आयाति,पुनश्चः स्थितप्रज्ञतां विना आत्मदर्शनं नैव भवितुर्हति। एवमत्रान्योन्याश्रयदोषः संजायते तन्हि भगवता श्रीकृष्णेन आत्मसाक्षात्काराय यः उपायः निर्दिष्टः सः निष्फलःएव दृश्यते। परञ्चात्र अग्रिमे 61 तमे श्लोकेत्रस्य उपायः भगवता श्रीकृष्णेनैव निर्दिष्टः--

**तानि सर्वाणि संयम्य**
**युक्त आसीत् मत्परः।**
**वशे हि यस्येन्द्रियाणि**
**तस्य प्रज्ञा प्रतिष्ठिता॥**

**भगवद्गीता ॥2-61॥**
अर्थात - यः जितेन्द्रियःकर्मयोगी पुरुषः अनासक्तो भूत्वा मयि परमेश्वरे एव मनः स्थापयति सः विद्वान् पुरुषः स्थितप्रज्ञः कथ्यते।
अन्वयशब्दार्थः-
श्लोकसंकेतः-
**यततो ह्यपि कौन्तेयः**
**हरन्ति प्रसभं मनः॥**
**गीता/2/60**
कौन्तेय हे अर्जुन!,यतत मन के निग्रह के लिए बहत सा यत्न करते हुए आत्मदर्शन के लिए प्रयत्नशील,हृभी,विपश्चित शास्त्रवेत्ता विवेकी, पुरुषस्य,पुरुष के ,अपृभी,प्रमाथीनि प्रबल, इन्द्रायाणिःचक्षु आदि इन्द्रियाँ, मनःविषयासक्त मन को, प्रसभं हरन्ति में लगा देती हैं।
**तत्वार्थः-** हे कुन्तीपुत्र अर्जुन!मन का निग्रह करने के लिए बहुत सा यत्न करते हुए आत्मदर्शन के लिए प्रयत्नशील विद्वान् शास्त्रवेत्ता योगी पुरुष के मन को भी बलबान् इन्द्रियाँ बल पूर्वक हर लेती हैं। तात्पर्य यह है कि ये इन्द्रियाँ मन को विषय की ओर लगाकर आत्मदर्शन से वञ्चित कर देती हैं।
**रहस्यात्मक-** तथ्य - मनुष्य अपने जन्म-जन्मान्तर के विषय गत संस्कार वश इन्द्रियों के वशीभूत होकर आत्मदर्शन से वञ्चित होते रहते हैं। इन्द्रियाँ इतनी बलवती होती हैं कि इन्द्रियों को संयमित करने हेतु कठिन यत्न करने वाले बड़े -बड़े योगी यतियों के मन को भी ये इन्द्रियाँ अपने विषयों में लगाकर भटकाती रहती हैं। यहाँ एक कठिन समस्या सामने खड़ी दिखाई दे रही है कि -- आत्मदर्शन के विना इन्द्रियों की विषयासक्ति कदापि नहीं हट सकती तथा विषयासक्ति हटे विना स्थितप्रज्ञता नहीं आ सकती तथा स्थितप्रज्ञता प्राप्त किये विना स्वस्वरुप का बोध नहीं हो सकता है अर्थात् आत्मदर्शन सम्भव नहीं है ,जो अन्योन्याश्रय दोष को उपस्थापित करता है। इस प्रकार भगवान् ने जो आत्मसाक्षात्कार के उपाय सुझाये हैं वे निष्फल सिद्ध हो जायेंगे।लेकिन इसके लिये भगवान् ने आगे के श्लोक संख्या 2/61में इस समस्या का निदान कर दिया है--

**तानि सर्वाणि संयम्य**
**युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि**
**तस्य प्रज्ञा प्रतिष्ठिता। ।**
**भगवद्गीता / 2/61**

अर्थात् कमर्योगी साधक उन सम्पूर्ण इन्द्रियों को वश में करके मेरे परायण होकर बैठे,क्योंकि जिसकी इन्द्रियाँ वश में हैं उसकी बुद्धि प्रतिष्ठित है।

## ॥ गीताज्ञानामृतविन्दवः॥

गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

**॥ दयासिन्धो कृपासिन्धो भावसिन्धो हरे हरे। ।**
**कृपया दयया नित्यं त्राहि मां त्राहि मां हरे॥**
**नारायण, हृषीकेश, केशव, माधव, गोविन्द,**
**भक्तवत्सल, कृपाकर, कृष्ण कृष्ण कृष्ण कृष्ण।**

**कृष्ण कृपा॥ गीताज्ञान संचरण समिति॥ कृष्ण कृपा॥ पटना विहार॥**
**कृष्ण कृपा॥ अध्यक्ष॥ डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्य। ।**
**।गीतागुरुत्वगरिमा॥** श्रूयतां निश्चीयतां सम्पूर्णा गीता गुरूत्व संचरणं। अर्जुनस्य स्वतस्स्फूर्तशिष्यता गुरूत्वावगाहिका। न सा पूर्वनियोजिता लोभलाभमूला च। न भौतिकभयनिवारणतत्परा। केवलमात्मश्रेयसे आत्मनः तीव्रा त्वरा।आत्मस्वरूपाप्तये तीव्रोन्मेषः। आत्मस्वातन्त्रं। न तत्र मेषानुधावनं। न तत्र पारतन्त्र्यं। न तत्र भौतिकसम्बन्धजालः। गुरूत्वमपि न परावलम्बितं। तत्तु सदा सर्वथा नित्यं निरपेक्षं। स्वभावतस्सर्वकल्याणतत्परत्वं। । तदर्थमेव गीताज्ञानगुरुत्वं।
अहोऽस्मिन् कलियुगे। धन्यो कृष्णः।
धन्या गीता। गीतां समाश्रय समाश्रय समाश्रय। ।
किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितकथे।
आश्चर्य आश्चर्य आश्चर्य आश्चर्य
कृष्ण कृष्णगीता की सत्ता में नवीन पथ तो भ्रमात्मक ही होगा। ।गीता चरम शीर्षता शाश्वत अक्षुण्ण है। ।जिसके ज्ञान की पुष्टि, समर्थन से संसार का सर्वज्ञान अस्तित्व को प्राप्त करता है।

# लक्ष्मीधरोद्गात्रा विरचितोऽयं नामनिर्मलदर्पण ग्रन्थः प्रक्रियाकौमुद्याः अन्यतमः उपादेयः

लक्ष्मीधरोद्गात्रा विरचितोऽयं नामनिर्मलदर्पणग्रन्थः प्रक्रियाकौमुद्याः अन्यतमः उपादेयः व्याख्याग्रन्थः यस्तु अद्यावधि अप्रकाशितावस्थायां पाण्डुलिपिरुपेण कुत्रचित् संग्रहालये कुत्रचित् ग्रन्थागारे वा पतितोऽस्ति। मया तु ग्रन्थस्यास्य उत्तरार्द्धस्य यथा तिङन्त-कृदन्त-भागयोः ताडपत्रमातृकाः कर्गजमातृकाः च संगृह्य तासां मूलमातृकाणां शुद्धपाठसम्पादनं तथा समीक्षाणात्मकमध्ययनं कृतं वर्त्तते। मया अत्र प्रस्तुतप्रबन्धस्य सीमानम् अभिलक्ष्य केवलं कृदन्तान्तर्गत-कृत्यप्रत्ययानां प्रक्रियानिरूपणे प्रारम्भिकमुपक्रमः, नामनिर्मलदर्पणे कृदन्तप्रकरणम् कृदन्तप्रकरणे कृत्यप्रत्ययाः, कृत्यभागे सूत्रोपक्रमवैशिष्ट्यम्, ग्रन्थकारस्य सूत्रलेखनशैली, लक्ष्यीकृताः केचन वैशिष्ट्यबिन्दवः इत्यादयः विषयाः सम्यक् आलोच्यन्ते। तथा च कतिपयानां सूत्राणां व्याख्यानशैलीं महाभाष्य-काशिका-प्रक्रियाकौमुदी-सिद्धान्तकौमुदीनां व्याख्यानशैल्या सह तुलयित्वा ग्रन्थतः लक्ष्यीकृतानि वैशिष्ट्यानि प्रतिपादयतुम् उद्यमः विहितोऽस्मिन् लघुशोधनिबन्धे। शब्दशास्त्रे प्रक्रियाक्रमस्य प्रमुखग्रन्थेषु रामचन्द्राचार्य्येण प्रणीता 'प्रक्रियाकौमुदी' एकमौलिकग्रन्थः। शब्दशास्त्रस्य लक्ष्यपूर्त्तये विशेषतः शब्दसाधनज्ञानार्थं ग्रन्थोऽयं प्रवर्त्तते। इदानीं ग्रन्थस्यास्य टीकाद्वयं प्राप्यते प्रसादः प्रकाशश्च। प्रसादटीकाकारः रामचन्द्राचार्य्यस्य पौत्र-नृसिंहस्य पुत्रः विठ्ठलाचार्य्यः एव। प्रकाशटीकाकारः भवति शेषकृष्णः। इदानीं तु महतः आनन्दस्य विषयः वर्त्तते यत् प्रक्रियाकौमुद्याः अन्य एकः व्याख्याग्रन्थः नाम्ना 'नामनिर्मलदर्पणः' पाण्डुलिपिरूपेण समुपलभ्यते ओडिशा-राज्य-संग्रहालये पुनश्च माड्रास-विश्वविद्यालय-ग्रन्थागारे । प्रसादटीकायाः प्रभावः नामनिर्मलदर्पणे परिलक्ष्यते एव। सतीषु अपि वह्वीषु पाणिनीयव्याख्यासु सम्भवतः उत्कलप्रान्ते पाणिनीयव्याकरणस्य प्रचारप्रसारदिशा प्रयत्नं कर्त्तुं नामनिर्मलदर्पणकारः उत्कलीयवैयाकरणः 'लक्ष्मीधरोद्गाता' पाणिनीय परम्परायां रामचन्द्रप्रणीतस्य प्रसिद्ध प्रक्रिया कौमुद्याख्य प्रक्रियाग्रन्थस्य 'नामनिर्मलदर्पणः' इति अपरां व्याख्यां प्रणीतवान्। परन्तु तेन स्वीयेऽस्मिन् ग्रन्थे कुत्राऽपि निर्माणकालस्य उल्लेखः नैव कृतः।
**नामनिर्मलदर्पणे कृदन्तप्रकरणम्-** सुबन्तानां तिङन्तानां च उभयेषां शब्दानां यथाक्रमं ज्ञानसंपत्त्यर्थं ग्रन्थोऽयं द्विधा विभज्यते। पूर्वार्द्धः उत्तरार्द्धः चेति। तत्र पूर्वार्द्धे सुबन्तानां ज्ञानाय क्रमेण संज्ञा, सन्धिः, स्त्रीप्रत्ययाः, कारकाणि, समासाः, तद्धितप्रत्ययाश्च निरूपिताः सन्ति।

छायाकारः सौरभ कुमार

प्रयागराज। कोरोनां अवहेल्य आस्थानकेसु जनसम्मर्दः

प्रयागराजे बकरीदतः पूर्वं छद्ममुखम् अधारयन् अजाः

# 'आप्' इत्यनेन च 'टाप् डाप् चाप्' इत्येतेषां ग्रहणं क्रियते

चतुर्षु पुरुषार्थेषु मोक्ष एव प्राणिमात्रस्य परमं प्रयोजनम्। मोक्षप्राप्त्युपायेषु वेदः अन्यतमं स्थानं भजते। तस्य महत्त्वभूतम् अङ्गं भवति व्याकरणशास्त्रं शब्दशास्त्रं वा। तत्र पाणिनीयशब्दशास्त्रे षड्विधं सूत्रं समुपवर्णितं महर्षिणा पाणिनिना। षड्विधेषु सूत्रेषु अधिकारसूत्राणां महत्त्वम् अतितरां विद्यते। तत्रापि च 'ङ्याप्प्रातिपदिकात्'1 इति सूत्रस्य। अतः सूत्रस्यास्य विपुलं विवेचनं विद्वद्भिः स्वस्वग्रन्थेषु कृतं वर्तते। 'स्वरितेनाधिकारः' इति पाणिनीयसूत्रबलेन अस्य अधिकारसूत्रत्वं इति पाणिनीयसूत्रबलेन अस्य अधिकारसूत्रत्वं भवति। अस्य चावधिः 'स्वौज समौट्छष्टाभ्यां भिस्ङेभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्' इत्यतः 'निष्प्रवाणिश्च' इति यावद्भवति। अस्याधिकारे समागतानां सूत्राणां संख्या आहत्य '1187' भवति। अस्याधिकारपरिधौ द्वादशावान्तर अधिकारसूत्राणि समायान्ति। शोधपत्रेऽस्मिन् सूत्रस्य पदार्थविचारद्वारा अस्याधिकारत्वविचारद्वारा च पाणिनीयशास्त्रे अस्य प्रासङ्गिकता चर्चिता विद्यते।
**अधिकारसूत्रस्वरूपम्-** 'अधि'- उपसर्गपूर्वकात् कृधातोः घञ्प्रत्यये कृते सति अधिकारशब्दः निष्पद्यते। व्याकरणशास्त्रे 'एकत्र उपात्तस्य अन्यत्र व्यापारः अधिकारः' भवतीति। यथा - 'कारके'5, 'प्रत्ययः', 'परश्च' इत्यादयः। अधिकारस्य हि प्रभावः त्रिविधः भवति। तद्यथा - सिंहावलोकितं चैव मण्डूकप्लुतमेव च। गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मताः। अधिकारः सम्पूर्णसूत्रस्य सूत्रांशपदस्य पदांशस्य चापि भवति। यथा- 'धातोः' 'अङ्गस्य' 'प्रत्ययः' इत्यादीनां सम्पूर्ण सूत्राणाम् उत्तरत्र अनुवृत्तिः भवति। 'प्राग्दीव्यतोऽण्' 'प्राग्वहतेष्ठक्''प्राग्वतेष्ठञ्' इत्यादानाञ्च सूत्रांशपदस्यानुवृत्तिः भवति। अधिकारसूत्राणि शक्तिग्राहकाणि न भवन्ति न वा संज्ञा संज्ञि प्रत्यायकानि। अतः संज्ञासूत्राणि न भवन्ति एतानि। एतेषाम् अर्थदृष्ट्या स्वतः परिपूर्णता भवति अन्येषां सूत्राणां चार्थपरिज्ञापनाय आवश्यकता न भवतीति। अधिकारस्य प्रासङ्गिकता अधिकारसूत्रैः एकत्र विधिसूत्राणाम् अल्पाक्षरत्वं रक्ष्यते अपरत्र चार्थ प्रतिपादने साहाय्यम् आचर्यते। इमानि सूत्राणि पाणिनीयव्याकरणप्रक्रियायाः असन्दिग्धप्रवृत्तये अतीव महत्त्वपूर्णां भूमिकाम् आवहन्ति। एवं परिलक्ष्यते यत् सूत्रात्मकशैल्या व्याकरणस्वरूपरचनायै अधिकार सूत्राणां परिकल्पना कृता वर्तते। यद्यपि एते स्वार्थबोधाय अन्येषां सूत्राणाम् अपेक्षां न कुर्वन्ति तथापि अन्यसूत्रप्रभेदानां आर्थिकपूर्णतायै भवत्येतेषां महानुपकारः। 'ङ्याप्प्रातिपदिकात्' इत्यस्य सामान्यविचारः 'ङी च आप् च प्रातिपदिकञ्च' इति ङ्याप्प्रातिपदिकं तस्मात् ङ्याप्प्रातिपदिकात्। अत्र समाहारद्वन्द्वसमासः भवति तस्मात् एकवचनम्। अन्यथा ङ्याप्प्रातिपदिकेभ्यः इत्येवं सूत्रस्वरूपं स्यात्। 'ङी' इति 'आप्' इति च अनुबन्धरहितयोः ग्रहणम् अत्र सूत्रे कृतं वर्तते। अतः 'ङी' इत्यनेन 'ङीप् ङीष् ङीन्' इत्येतेषाम्, 'आप्' इत्यनेन च 'टाप् डाप् चाप्' इत्येतेषां ग्रहणं क्रियते। सूत्रस्यास्य सामान्यार्थः भवति - 'ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च प्रत्ययाः स्युः।' अष्टाध्याय्यां संज्ञा-परिभाषा-विधिः-नियमः-अतिदेशः-अधिकारश्च इति षड्विधं सूत्रं समुपवर्णितं भगवता पाणिनिना। तेषु सूत्रप्रभेदेषु 'ङ्याप्प्रातिपदिकात्' इत्येतस्य सूत्रस्य अधिकारसूत्रेषु अन्तर्भावः भवति। अधिकार बोधकञ्च सूत्रं स्वयमेव भगवता पाणिनिना लिखित मस्ति 'स्वरितेनाधिकारः' इति। अर्थात् स्वरितेन चिह्नेन अधिकारः ज्ञातव्यः। तस्य च स्वरितत्वस्य या अवधिः सा एवावधिः अधिकारस्याऽपि भवति। अस्मिन्नपि सूत्रे स्वरितत्वं विद्यते। तस्य च स्वरितत्वस्य का अवधिः का वा सीमा इत्यत्र आचार्याणां वचनं प्रमाणत्वेन वर्तते। तदुक्तम् - 'आपञ्चम परिसमाप्तेर धिकारः।' अर्थात् पञ्चमाध्यायस्य परिसमाप्तिं यावत्'ङ्याप्प्रातिपदिकात्' इत्यधिकारः गच्छति। अतः अत्र - कृतस्य स्वरितत्वस्य सा एवावधिः इति वक्तुं शक्यते। अयमधिकारः प्रकृतिरूपात्मकः भवति। अत्र च 'प्रत्ययः' इत्यधिकारः अपि आयाति। अतः एतद्वक्तुं शक्यते यत् इत ऊर्ध्वं पञ्चमाध्यायस्य परिसमाप्तिं यावत् ये प्रत्ययाः निर्दिष्टाः ते ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च स्युरिति। प्रायशः तद्धितप्रत्ययाः अस्याधिकारस्य क्षेत्रे समापतन्ति। आहत्य अस्याधिकारक्षेत्रं '1187' पाणिनिसूत्रात्मकं भवति। अस्याधिकारस्य प्रभावक्षेत्रे द्वादशावान्तराधिकाराः आयान्ति। तत्र प्रथमः भवति - 'स्त्रियाम्' इति। अत्र हि 'ङ्याप्प्रातिपदिकात्' इत्यतः 'प्रातिपदिकात्' इत्येव अभिसम्बध्यते। यथोक्तम् - 'ङ्याप्प्रातिपदिकात्' इति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यते, ङ्यापोरनेनैव विधानात्। एवमेव अन्येष्वपि अवान्तराधिकारसूत्रेषु अस्याधिकारस्य सम्बन्धः भवत्येव। तद्यथा - 'तद्धिताः' इत्यत्र सम्पूर्णस्य सूत्रस्य सम्बन्धेन अस्माभिः अर्थः कर्तुं शक्यते। 'ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च तद्धिताः स्युरिति।' तृतीयः अवान्तराधिकारः भवति - 'प्राग्दीव्यतोऽण्' इति। एवमन्येऽपि प्रत्ययाधिकाराः अस्य परिधौ समापतन्ति। यथा- 'प्राग्वहतेष्ठक्', 'प्राग्घिताद्यत्' 'प्राक् क्रीतीच्छः' 'प्राद्वतेष्ठञ्', 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्', 'प्रागिवात्कः' इत्यादयः। अर्थनिर्देशात्मकः अधिकारः यथा - 'शेषे' 'कालात्' च। 'किं सर्वनामबहुभ्योऽद्वयादिभ्यः'एष एकः प्रकृत्यधिकारः अपि अस्य सीम्नि आयाति। एवं प्रकारेण द्वादशावान्तराधिकाराः अस्य कार्यक्षेत्रे दृश्यन्ते। पदशः विचारः सूत्रस्य स्वरूपविषये एका शंका समुदेति यत् 'प्रातिपदिकात्' इत्येव सूत्रस्वरूपं भवेत्। तेन लक्ष्यसिद्धिरपि शक्यते सूत्रस्य अल्पाक्षर त्वमपि रक्षितं भविष्यति। यतोहि एका परिभाषा वर्तते 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणम्' इति। अर्थात् प्रातिपदिकमात्रबोधकपदघटिते शास्त्रे लिङ्गबोधकप्रत्ययविशिष्टस्याऽपि ग्रहणं भवति। तेन अयस्कुम्भी इत्यत्र अपि 'अतः कृकमिकंस कुंभपात्र कुशाकर्णीष्विनव्ययस्य'इत्यनेन अकारादुत्तरस्य विसर्गस्य सकारादेशः भवत्येव, कुम्भ इत्यनेन लिङ्गबोधकप्रत्ययविशिष्टस्य कुम्भी इत्यस्य ग्रहणात्। तथैव 'ङ्याप्प्रातिपदिकात्' इत्यत्राऽपि 'प्रातिपदिकात्' इति प्रातिपदिकमात्रबोधकं पदं भवति। अतः तेनाऽपि

## 'नामनिर्मल दर्पणम्' यस्य रचयिता उत्कलीयः वैयाकरणः लक्ष्मीधरः उद्गाता

पण्डितप्रवर-रामचन्द्रस्य 'प्रक्रियाकौमुदी' इति प्रसिद्धग्रन्थस्य अन्य एकः टीकाग्रन्थः 'नामनिर्मलदर्पणम्' यस्य रचयिता उत्कलीयः वैयाकरणःलक्ष्मीधरः उद्गाता। परन्तु ग्रन्थोऽयं विदुषां लोचनान्तराले मूलमातृकारूपेण वर्त्तते एव। टीकाग्रन्थस्यास्य पूर्वार्द्धसम्बन्धिताः ताड़पत्रमातृकाः ओड़िशा-राज्य-संग्रहालयतः पुनश्च माड्रास-विश्वविद्यालय-पाण्डुलिपिसंग्रहालयतः कर्गजमातृकाः मया संगृहीताः। ग्रन्थोऽयं द्विधा विभज्यते यथा पूर्वार्द्धः उत्तरार्द्धश्चेति। तत्र पूर्वार्द्धे वर्ण्णिते संज्ञाप्रकरणे भट्टोजि-दीक्षितस्य सिद्धान्तकौमुदीवत् न केवलं पाणिनीयसूत्राणां व्याख्यानं प्राप्यते अपि च कासांचन परिभाषाणामपि व्याख्यानं कृतं वर्त्तते। तथाकरणे ग्रन्थकारस्य उद्देश्यं प्रकरणसमाप्तिसूचकवाक्यात् यथा- 'इति सन्ध्युपयोगिसंज्ञाप्रकरणव्याख्या समाप्ता' इति सूचनायाः अग्रिम-सन्धिप्रकरणं मनसि निधाय अपेक्षितानि संज्ञा-परिभाषा-सूत्राणि प्रकरणेऽस्मिन् व्याख्यातानि। एतेन संज्ञाप्रकरणमिदं सन्धिप्रकरणे प्रवेशाय तदङ्गभूतमेकम् उपप्रकरणमिति वक्तुं शक्यते। अस्य लघुशोधनिबन्धस्य सीमानम् अभिलक्ष्य प्रारम्भिकमुपक्रमं, ग्रन्थस्य तथा ग्रन्थकारस्य सामान्यपरिचयं, संज्ञानिर्माणस्य अपरिहार्य्यत्वं, नामनिर्मल दर्पणस्य संज्ञाप्रकरणे सूत्रसंघटनक्रमं, तत्र लक्ष्यीकृतानि वैशिष्ट्यानि च आलोचयितुं मया प्रयत्नः कृतः वर्त्तते।

इह जगति सर्वविधेषु व्याकरणेषु पाणिनीयं व्याकरणं सर्वशिरोमणिरिति वक्तुं शक्यते। महर्षिपाणिनिना कृता 'अष्टाध्यायी' सूत्रात्मिका इति सर्वैः परिज्ञाता एव। सूत्रात्मकस्यास्य पाणिनीयमहाग्रन्थस्य पठनपाठने अवगमने च सौकर्य्यं विधातुम् अनेकाः वृत्तयः विरचिताः, महता प्रयत्नेन वार्त्तिकानि प्रणीतानि तथैव अतीव विस्तरेण अध्यायपादसरणीम् उपादाय महाभाष्यं विरचितम्। पुनश्च उदाहरणप्रत्युदाहरणमाध्यमेन सूत्रार्थं सम्यक् प्रतिपादयितुं वामनजयादित्याभ्यां काशिकावृत्तिः विरचिता। तथापि गच्छता कालेन सूत्रात्मकस्यास्य ग्रन्थस्य अवबोधने क्लिष्टता संजाता। तदैव पाणिनीयव्याकरणस्य प्रक्रियाक्रमः आरब्धः। इदानीं तु प्रक्रियाग्रन्थेषु भट्टोजिदीक्षितेन विरचिता सिद्धान्तकौमुदी प्रमुखं स्थानं भजते। परन्तु अत्र अवधेयं यत् सिद्धान्तकौमुद्याः उपजीव्यं भवति प्रक्रियाकौमुदी। 1450 तमे ईशवीये वर्षे आन्ध्रदेशीय-ब्राह्मण-विदुषा रामचन्द्राचार्य्येण प्रक्रियाकौमुदी विरचिता। यद्यपि इतः प्राक् धर्मकीर्त्तिना विरचितो रूपावतार-नामकः कश्चित् अन्यः ग्रन्थः आसीत्। तथापि इदानिम् समादृतायाः सिद्धान्तकौमुद्याः उद्गमस्थानं प्रक्रियाकौमुदी एव साकल्येन वर्त्तते। सम्प्रति प्रक्रियाकौमुद्याः केवलं टीकाद्वयमेव उपलभ्यते यथा विट्ठलाचार्य्येण प्रणीता 'प्रसादटीका' शेषकृष्णेन विरचिता 'प्रकाशटीका' च। परन्तु महतः हर्षस्य विषयः यत् इदानीम् उत्कलीयविदुषा लक्ष्मीधरोद्गात्रा विरचिता नामनिर्मलदर्पणाख्या अन्या एका टीका पाण्डुलिपिरुपेण समुपलभ्यते या तु अद्यावधि अप्रकाशिता वर्त्तते। टीकाग्रन्थस्यास्य पूर्वार्द्धसम्बन्धिताः ताड़पत्रमातृकाः ओड़िशा-राज्य-संग्रहालयतः (ध्ए्श) पुनश्च माड्रास-विश्वविद्यालय-पाण्डुलिपिसंग्रहालयतः (उध्श्थ) कर्गजमातृकाः मया संगृहीताः।

## संज्ञानिर्माणस्य अपरिहार्य्यत्वम्

शास्त्रेषु विशेषतः व्याकरणशास्त्रे लाघवं प्रमुखं वैशिष्ट्यं भवति। व्याकरणं सूत्रात्मकं भवति। सूत्रस्य सूत्रत्वनिरूपणप्रसङ्गे प्रसिद्धोऽयं श्लोकः स्मर्य्यते -
**अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥**
एषु लक्षणेषु 'अल्पाक्षरत्वम्' अत्यन्तं महत्त्वपूर्णं भवति। विधिसूत्रादिषु पौनःपौनिकतया वर्ण्णानाम् उच्चारणेन सूत्रं गुरुत्वं लभते, तदर्थं लघुत्वसंपादनाय निर्मितैः पारिभाषिकशब्दैः तद्गुरुत्वप्रशमनं क्रियते। लघुत्वसंपादनसाधनरूपाः ते शब्दाः भवन्ति संज्ञाशब्दाः यथा गुण-वृद्धि-सर्वनाम-प्रातिपदिक-समास-कृत्-अव्यय-इत्यादयः स्वल्पाक्षरैः कल्पिताः, एतेषां शब्दानामभीष्टाक्षराणि बहूनि सन्ति। आ, ऐ, औ इति वर्ण्णत्रयस्य स्थाने 'वृद्धि'-शब्दः, अ, ए, ओ इत्येषां वर्ण्णानां स्थाने 'गुण'-शब्दः, सर्व-उभ-इत्यादिबहुषु शब्देषु केवलं 'सर्वनाम'-शब्दः तत् तत् लघुत्वसंपादनसाधनानि सन्ति। 'लघ्वर्थं हि संज्ञाकरणं संज्ञानां च नाम यत्तु न लघीयः' इत्यादि दर्शनं तत्र संज्ञाशास्त्रनिर्माणमूले विद्यते। पाणिनीयव्याकरणे शताधिकसंज्ञाः प्राप्यन्ते। तासु प्रमुखाः सन्ति अकृत्रिमसंज्ञाः। काश्चन भवन्ति टि-घु-घ-भ-इत्यादयः कृत्रिमसंज्ञाः याः पाणिनिना निर्मिताः। काश्चन पूर्वाचार्य्यसंज्ञाः अपि पाणिनिना स्वीकृताः। सर्वनाम-बहुव्रीहि-अव्ययीभाव-इत्यादिमहासंज्ञाकरणात् तेषाम् अन्वर्थाभिधायित्वं प्रसिद्धम्।
अष्टाध्याय्याः प्रथमं सूत्रं भवति 'वृद्धिरादैच्' (1.1.1) तथा द्वितीयं सूत्रं भवति 'अदेङ्गुणः' (1.1.2 )। 'वाक्यार्थज्ञाने पदार्थज्ञानं कारणम्' इति न्यायेन तत्तत्सूत्रार्थावगमनार्थं प्रत्याहारज्ञानं परमावश्यकम्। यतो हि प्रत्याहाराः एव सूत्रात्मकस्यास्य पाणिनीयव्याकरणस्य मूलाधाराः भवन्ति। एतेषां ज्ञानाभावेन विशालमिदं शब्दशास्त्रं सम्यक् अवगन्तुं न शक्यते। अतः प्रक्रियाकौमुदीकारः सर्वादौ 'अथ प्रत्याहारसूत्राणि' इति व्याख्यातानि तथा सकलशास्त्रप्रवृत्तेः संज्ञामूलकत्वात् आदौ संज्ञाप्रकरणम् उक्तं वर्त्तते। यतो 'नामनिर्मलदर्पणः' प्रक्रियाकौमुद्याः टीकाऽस्ति ग्रन्थकारेणापि प्रक्रियाकौमुद्यनुसारमेव स्वव्याख्या कृता। तत्र सर्वप्रथमम् 'उपदेशेऽजनुनासिक इत्' (1.3.2) , 'हलन्त्यम्' (1.3.3), इति सूत्रद्वयेन इत्संज्ञां प्रतिपाद्य 'आदिरन्त्येन सहेता' (1.1.71), इत्यनेन प्रत्याहारविधायकसूत्रमाध्यमेन प्रत्याहाराः संसाधिताः भवन्ति। तेन अच्-हल्-इत्यादयः संज्ञाः सिद्धाः भवन्ति । नामनिर्मलदर्पणग्रन्थस्य पाण्डुलिप्यां स्पष्टरूपेण स्थूलाक्षरैः कतिपयं मूल-व्याख्येय-सूत्रं पूर्ण्णरूपेण न लिखितम् अपितु सूत्रारम्भात् द्वित्राशब्दैः इति-शब्दनिर्देशपूर्वकं सूत्रव्याख्या प्रारभ्यते। यथा-'उच्चैरुदात्तः' (1.2.29) सूत्रं तत्र केवलं 'उच्चैरिति' लिखित्वा व्याख्या क्रियते। परन्तु कतिपयानि सूत्राणि तु पूर्ण्णरूपेण लिखितानि पाण्डुलिप्यां नामनिर्मलदर्पणकारेण। संज्ञाप्रकरणं नाम संज्ञानां प्रकरणम् इति। परन्तु पाणिनीयमहाशास्त्रे वर्ण्णितानां सर्वासां संज्ञानां वर्ण्णनम् अत्र न विधीयते। स्वरवर्ण्णानाम् अष्टादशभेदवर्ण्णन-प्रसङ्गे काश्चित् संज्ञाः प्रतिपाद्य वृद्धि-गुण-धातु-उपसर्ग-अवसान-संहिता-पद-इत्यादीनां वर्ण्णना कृता। अत्र तासामेव संज्ञानां विवरणं कृतं यासां प्राग्ज्ञानं विना सन्धिविधानम् अशक्यम्। एतेन संज्ञाप्रकरणमिदं सन्धिप्रकरणे प्रवेशाय तदङ्गभूतम् एकम् उपप्रकरणमिति वक्तुं शक्यते।

